॥ श्री गुरुभ्यो नमः ॥

## ॥ अथ दशावतार स्तुतिः ॥

॥ श्री लक्ष्मी हयग्रीवाय नमः ॥

[ अश्व धाटी ]

**ॐ मत्स्याय नमः**

प्रोष्ठीश विग्रह सुनिष्ठीवनोद्धृतविशिष्टांबुचारिजलधे
कोष्ठांतराहितविचेष्टागमौघपरमेष्ठीडित त्वमव माम् ।
प्रेष्ठार्कसूनुमनुचेष्टार्थ मात्मविदतीष्टो युगांतसमये
स्थेष्टात्मशृंगधृतकाष्ठांबुवाहन वराष्टापदप्रभतनो ॥ १ ॥

**ॐ श्री हयग्रीवाय नमः**

खंडीभवद्बहुलडिंडीरजृंभण सुचंडी कृतो दधि महा
कांडाति चित्र गति शौंडाद्य हैमरद भांडा प्रमेय चरित ।
चंडाश्वकंठमद शुंडाल दुर्हृदय गंडा भिखंडाकर दो–
श्चंडा मरेशहय तुंडाकृते दृशम खंडा मलं प्रदिश मे ॥ २ ॥

**ॐ कूर्माय नमः**

कूर्माकृते त्ववतु नर्मात्म पृष्ठधृत भर्मात्म मंदर गिरे
धर्मावलंबन सुधर्मा सदाकलित शर्मा सुधावितरणात् ।
दुर्मान राहुमुख दुर्मायि दानवसुमर्मा भिभेदन पटो
घर्मार्क कांति वर वर्मा भवान् भुवन निर्माण धूत विकृतिः ॥ ३ ॥

**ॐ धन्वंतरे नमः**

धन्वंतरेंगरुचि धन्वंतरेऽरितरु धन्वंस्तरीभवसुधा–
भान्वंतरावसथ मन्वंतराधिकृत तन्वंतरौषधनिधे ।
धन्वंतरंगशुगुधन्वंतमाजिशुवि तन्वन्ममाब्धि तनया
सून्वंतकात्महृदतन्वंतरावयव तन्वंतरार्तिजलधौ ॥ ४ ॥

**ॐ श्री नारायणायै नमः**

याक्षीरवार्धिमदनाक्षीणदर्पदितिजाक्षोभितामरगणा
पेक्षाप्तयेऽजनिवलक्षांशुबिंबजिदतीक्ष्णालकावृतमुखी ।
सूक्ष्मावलग्नवसनाऽऽक्षेपकृत्कुच कटाक्षाक्षमीकृतमनो
दीक्षासुराहृतसुधाऽक्षाणिनोऽऽवतु सुरूक्षेक्षणाद्धरितनुः ॥ ५ ॥

**ॐ श्री नारायणायै नमः**

शिक्षादियुङ्गगम दीक्षासुलक्षण परीक्षाक्षमाविधिसती
दाक्षायणी क्षमति साक्षाद्रमापिनय दाक्षेपवीक्षणविधौ ।
प्रेक्षाक्षिलोभकरलाक्षार सोक्षि तप दाक्षेपलक्षितधरा
साऽक्षारितात्मतनु भूक्षारकारिनिटि लाक्षाऽक्षमानवतु नः ॥ ६ ॥

**ॐ श्री वराहाय नमः**

नीलांबुदाभशुभ शीलाद्रिदेहधर खेलाहृतोदधिधुनी
शैलादियुक्त निखिलेला कटाद्यसुर तूलाटवीदहन ते ।
कोलाकृते जलधि कालाचयावयव नीलाब्जदंष्ट्र धरिणी
लीलास्पदोरुतलमूलाशियोगिवरजालाभिवंदित नमः ॥ ७ ॥

**ॐ श्री नरसिंहाय नमः**

दंभोलितीक्ष्णनख संभेदितेंद्ररिपु कुंभींद्र पाहि कृपया
स्तंभार्भ कासहनडिंभाय दत्तवर गंभीर नाद नृहरे ।
अंभोदिजानुसरणांभोजभूपवन कुंभीन सेश खगराट्
कुंभींद्र कृत्तिधर जंभारि षण्मुख मुखांभोरु हाभि नुत मां ॥ ८ ॥

**ॐ श्री वामनाय नमः**

पिंगाक्ष विक्रम तुरंगादि सैन्य चतुरंगा वलिप्त दनुजा
सांगा ध्वरस्थ बलि सांगावपात हृषितांगा मरालिनुत ते ।
शृंगार पादनख तुंगाग्रभिन्न कन कांगांडपाति तटिनी
तुंगाति मंगल तरंगा भिभूत भज कांगाघ वामन नमः ॥ ९ ॥

**ॐ श्री वामनाय नमः**

ध्यानार्ह वामन तनोनाथ पाहि यजमाना सुरेशवसुधा
दानाय याचनिक लीनार्थ वाग्वशित नानासदस्य दनुज ।
मीनांक निर्मल निशानाथ कोटिल समानात्म मौंजिगुणकौ
पीनाच्छ सूत्रपद यानात पत्रकर कानम्यदंडवरभृत् ॥ १० ॥

**ॐ श्री परशुरामाय नमः**

धैर्यांबुधे परशुचर्याधिकृत्तखल वर्यावनीश्वर महा
शौर्याभिभूतकृत वीर्यात्मजातभुज वीर्यावलेपनिकर ।
भार्यापराधकुपितार्याज्ञयागलितनार्यात्म सूगल तरो
कार्याऽपराधमविचार्यार्य मौघजयि वीर्यामिता मयि दया ॥ ११ ॥

**ॐ श्री रामाय नमः**

श्रीरामलक्ष्मणशुकाराम भूरवतुगौरामलामितमहो
हारामरस्तुत यशोरामकांतिसुत नोरामलब्धकलह ।
स्वारामवर्यरिपु वीरामयार्धिकर चीरामलावृतकटे
स्वाराम दर्शनजमारामयागतसुघोरामनोरथहर ॥ १२ ॥

**ॐ श्री रामाय नमः**

श्रीकेशवप्रदिशनाकेश जातकपिलोकेश भग्नरविभू
स्तोकेतरार्तिहरणाकेवलार्तसुखधीकेकिकालजलद ।
साकेतनाथवरपाकेरमुख्यसुत कोकेन भक्तिमतुलां
राकेंदु बिंबमुख काकेक्षणापह हृषीकेश तेंऽघ्रिकमले ॥ १३ ॥

**ॐ श्री रामाय नमः**

रामेनृणां हृदभिरामेनराशिकुल भीमेमनोद्यरमतां
गोमेदिनीजयितपोऽमेयगाधिसुत कामेनिविष्ट मनसी ।
श्यामे सदा त्वयिजितामेय तापसज रामे गताधिकसमे
भीमेशचापदलनामेयशौर्यजित वामे क्षणे विजयिनी ॥ १४ ॥

**ॐ श्री सीतास्वरूपिणै श्रीयै नमः**

कांतारगेहखल कांतारटद्वदन कांतालकांतकशरं
कांतारऽऽयाऽबुजनि कांतान्ववायविधु कांताश्मभादिपहरे ।
कांतालिलोलदल कांताभिशोभितिल कांताभवंतमनुसा
कांतानुयानजित कांतारदुर्गकट कांतारमात्ववतु मां ॥ १५ ॥

**ॐ श्री रामाय नमः**

दांतं दशानन सुतांतं धरामधिवसंतं प्रचंड तपसा
क्लांतं समेत्य विपिनांतं त्ववाप यमनंतं तपस्वि पटलम् ।
यांतं भवारति भयांतं ममाशु भगवंतं भरेण भजतात्
स्वांतं सवारि दनुजांतं धराधरनिशांतं स तापसवरम् ॥ १६ ॥

**ॐ श्री रामाय नमः**

शंपाभचापलव कंपास्त शतृबल संपादितामितयशाः
शं पाद तामरस संपाति नोऽल मनु कंपार सेन दिशमे ।
संपाति पक्षि सहजंपाप रावण हतं पावनं यद कृथा
त्वां पाप कूप पति तं पाहि मां तदपि पंपा सरस्त टचर ॥ १७ ॥

**ॐ श्री रामाय नमः**

लॊलाक्ष्यपेक्षितसुलीलाकुरंगवद खेलाकुतूहल गते
स्वालापभूमिजनिबालापहार्यनुज पालाद्यभो जय जय ।
बालाग्निदग्धपुर शालानिलात्मजनि फालात्तपत्तलरजो
नीलांगदादिकपि मालाकृतालिपथ मूलाभ्यतीत जलधे ॥ १८ ॥

**ॐ श्री रामाय नमः**

तूणीरकार्मुककृपाणीकिणांकभुज पाणी रविप्रतिमभाः
क्षोणिधरालिनिभ घोणी मुखादिघनवेणीसुरक्षणकरः ।
शोणिभवन्नयन कोणी जितांबुनिधि पाणी रितार्हणमणी
श्रेणीवृतांघ्रिरिह वाणीशसूनुवर वाणीस्तुतो विजयते ॥ १९ ॥

**ॐ श्री रामाय नमः**

हुंकारपूर्वमथटंकारनादमति पंकाऽवधार्य चलिता
लंकाशिलोच्चयविशंका पतद्भिदुर शंकासयस्य धनुषः ।
लंकाधिपोमनुतयंकालरात्रिमिव शंकाशताकुलधिया
तंकालदंडशत संकाशकार्मुख शरांकान्वितं भज हरिं ॥ २० ॥

**ॐ श्री रामाय नमः**

धीमानमेयतनुधामाऽऽर्तमंगलदनामा रमाकमलभू
कामारिपन्नगप कामाहि वैरिगुरु सोमादिवंद्य महिम ।
स्थेमादिनापगत सीमाऽवतात्सखल सामाज रावणरिपू
रामाभिदो हरिरभौमाकृतिः प्रतन सामादि वेदविषयः ॥ २१ ॥

**ॐ श्री रामाय नमः**

दोषाऽत्मभूवशतुराषाडतिक्रमज रोषात्मभर्तृवचस
पाषाणभूतमुनियोषावरात्मतनुवेशादिदायिचरणः ।
नैषाधयोषिधसुभेषाकृदंडजनि दोषाचरादि सुहृदो
दोषाग्रजन्ममृतिशोषापहोऽवतु सुदोषांघ्रिजातहननात् ॥ २२ ॥

**ॐ श्री कृष्णाय नमः**

वृंदावनस्थपशु वृंदावनं विनुत वृंदारकैकशरणं
नंदात्मजं निहत निंदा कृदा सुरजनंदामबद्ध जठरम् ।
वंदामहे वयम मंदावदातरुचि मंदाक्षकारिवदनं
कुंदालिदंतमुत कंदासितप्रभतनुंदावराक्षसहरम् ॥ २३ ॥

**ॐ श्री कृष्णाय नमः**

गोपालकोत्सवकृतापारभक्ष्यरस सूपान्नलोपकुपिता
शापालयापितलयापांबुदालिसलिलापायधारितगिरे ।
सापांगदर्शनजतापांग रागयुत गोपांग नांशुक हृति
व्यापार शौंडविविधापाय तस्त्वमव मव गोपारिजातहरण ॥ २४ ॥

**ॐ श्री कृष्णाय नमः**

कंसादिकासदवतंसा वनीपतिविहिंसाकृतात्मजनुषं
संसारभूतमिह संसारबद्धमन संसारचित्सुखतनुम् ।
संसाधयंतमनिशंसात्विकव्रजमहंसादरं भत भजे
हंसादितापसरिरंसास्पदं परमहंसादि वंद्य चरणम् ॥ २५॥

**ॐ श्री कृष्णाय नमः**

राजीव नेत्रविदुराजीवमामवतु राजीव केतनवशं
वाजीभपत्तिनृपराजी रथान्वितज राजीव गर्वशमन ।
वाजीशवाहसित वाजीश दैत्य तनु वाजीश भेदकरदो–
र्जाजीकदंबनव राजीव मुख्यसुम राजीसुवासितशिरः ॥ २६ ॥

**ॐ श्री कृष्णाय नमः**

कालीहृदावसथ कालीयकुंडलिप कालीस्थपादनखरा
व्यालीनवांशुकर वालिगणारुणित कालीरुचे जय जय ।
केलीलवापहृत कालीशदत्तवर नालीकदृप्तदितिभू
चूलीकगोपमहिलालीतनूघसृणधूलीकणांकहृदय ॥ २७ ॥

**ॐ श्री कृष्णाय नमः**

कृष्णादि पांडुसुत कृष्णा मनःप्रचुर तृष्णा सुतृप्तिकरवाक्
कृष्णांकपालिरत कृष्णाभिधाघहर कृष्णादिषण्महिल भोः ।
पुष्णातु मामजित निष्णाद वार्धिमुद नुष्णांशु मंडल हरे
जिष्णो गिरींद्र धर विष्णो वृषावरज धृष्णो भवान् करुणया ॥ २८ ॥

**ॐ श्री कृष्णाय नमः**

रामाशिरोमणिधरामासमेतबलरामानुजाभिधरतिं
व्योमासुरांतकर ते मारतात दिशमे माधवांघ्रिकमलॆ ।
कामार्तभौमपुर रामावलिप्रणय वामाक्षिपीततनुभा
भीमाहिनाथमुखवैमानिकाभिनुत भीमाभिवंद्य चरण ॥ २९ ॥

**ॐ श्री कृष्णाय नमः**

स्वक्ष्वेलभक्ष्यभय दाक्षिश्रवो गणज लाक्षेपपाशयमनं
लाक्षगृहज्वलन रक्षो हिडिंबबक भैक्षान्नपूर्वविपदः ।
अक्षानुबंधभवरूक्षाक्षरश्रवण साक्षान्महिष्यवमती
कक्षानुयानमधमक्ष्मापसेवनमभीक्ष्णापहासमसतां ॥ ३० ॥

चक्षाण एवनिज पक्षाग्रभूदशशताक्षात्मजादि सुहृदा
माक्षेपकारिकुनृपाक्षौहिणीशतबलाक्षोभदीक्षितमनाः ।
ताक्ष्यासिचापशरतीक्ष्णारिपूर्वनिज लक्ष्माणिचाप्यगणयन्
वृक्षालयध्वजरिरक्षाकरो जयति लक्ष्मीपतिर्यदुपतिः ॥ ३१ ॥

**ॐ श्री बुद्धाय नमः, ओं श्री कल्किने नमः**

बुद्धावतारकवि बद्धानुकंपकुरु बद्धांजलौ मयि दयां
शौद्धोदनिप्रमुख सैद्धांतिका सुगम बौद्धागमप्रणयन ।
क्रुद्धाहितासुहृतिसिद्धासिखेटधर शुद्धाश्वयानकमला
शुद्धांतमांरुचिपि नद्धाखिलांग निज मद्धाऽव कल्क्यभिध भोः ॥ ३२ ॥

**ॐ श्री बदरी नारायण नमः**

सारंग कृत्तिधर सारंग वारिधर सारंग राजवरदा
सारंग दारितर सारंग तात्ममद सारंगतौषधबलं ।
सारंग वत्कुसुम सारं गतं च तव सारंग मांघ्रियुगलं
सारंग वर्णमप सारंग ताब्जमद सारंग दिंस्त्वमव माम् ॥ ३३ ॥

**मंगळा चरण**

ग्रीवास्य वाहतनु देवांडजादिदश भावाभिराम चरितं
भावातिभव्यशुभ दीवादिराजयति भूवाग्विलास निलयं ।
श्रीवागधीशमुख देवाभिनम्य हरिसेवार्चनेषु पठता–
मावास एवभविताऽवाग्भवेतरसुरावासलोकनिकरे ॥ ३४ ॥

॥ इति श्रीमद्वादिराजपूज्यचरण विरचितं
श्रीदशावतारस्तुतिः संपूर्णं ॥

॥ भारतीरमणमुख्यप्राणांतर्गत श्रीकृष्णार्पणमस्तु ॥